अथ 'संन्यस्येदिति' कः शास्त्रार्थः । कोऽयं संन्यासो नाम ?

ममेदमिति परिग्रहत्यागः ।

"ननु वेदसंन्यासिका इत्युक्तम् । तत्रेदं प्रतीयते 'वेदस्य वेदार्थस्य वा संन्यासः', न च वैदिककर्मसिद्ध्यर्था ये प्रतिग्रहादयस्तेषां संन्यासः ।"

'इदमानन्त्यमिच्छतामिति' (श्लो० ८४) अध्ययनस्य ज्ञानप्राधान्येऽपि विहितत्वात् । अग्निहोत्रादीनां तु द्रव्यसाध्यत्वादसति ममकारे त्याग एव । स चायं धर्मोपादको मृतभार्यस्य परनिष्ठस्य वा कृतसंप्रतिविधानस्य । वाजसनेयके हि पठ्यते "यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह" इत्यादि । अग्निसमारोपणं च तदा विहितम् । जीर्णस्य च "जरया ह वा एतस्मान्मुच्यत" इत्यामनन्ति । यानि चाद्रव्यसाध्यानि संध्योपासनादीनि नित्याग्निहोत्रादीनि तेषामनिषेधात्तत्र आ अन्त्यादुच्छ्वासादधिकारः ॥ ९४ ॥

संन्यस्य सर्वकर्माणि कर्मदोषानपानुदन् ॥
नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत् ॥ ९५ ॥

**वेदमभ्यस्येति** वेदस्यात्यागमाह । दर्शितमेतत् ।

**अभ्यस्यन्निति** शतृप्रत्ययान्तपाठो वा ।

**पुत्रैश्वर्ये सुखं वसेत्** । पुत्रग्रहणमुत्पन्नस्य पुत्रस्य । अन्योऽपि यस्तत्स्थानः पौत्रादिस्तत्रापि युक्तो गृहान्तरन्यास इत्याहुः ॥ ९५ ॥

एवं संन्यस्य कर्माणि स्वकार्यपरमोऽस्पृहः ॥
संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम् ॥ ९६ ॥

**स्वकार्यमा**त्मोपासनं **परमं** प्रधानमस्येति स्वकार्यपरमः ।

**अस्पृहः** मनसाऽपि स्पृहा न क्वचित्कर्तव्या ॥ ९६ ॥

एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः ॥
पुण्योऽक्षयफलः प्रेत्य राज्ञां धर्मं निबोधत ॥ ९७ ॥

**इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां षष्ठोऽध्यायः ॥ ६ ॥**

**चतुर्विधो** धर्मश्चातुराश्रम्यम् । ब्राह्मणस्य सर्वमेतद्विहितम् ।

"ननु च 'एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विज' इति द्विजग्रहणमुपक्रमे श्रुतम् । तस्य चानुपजातविरोधित्वात्त्रैवर्णिकार्थता निश्चिता । अतश्चेदं ब्राह्मणग्रहणं त्रैवर्णिकप्रदर्शनार्थमेव युक्तम् । यद्येकवाक्यतोपक्रमोपसंहारयोर्न स्यात् तदा नैवं स्यात् । एकवाक्यत्वे तु बलवदुपक्रमार्थः शक्यः प्रतिपत्तुम्" ।

कृत्स्नवाक्यपर्यालोचनया योऽर्थः स निश्चीयते । अतो द्विजग्रहणं ब्राह्मणपरतयोप संहर्तव्यम् । अस्ति ब्राह्मणस्य द्विजातित्वम्, न तु सर्वेषु द्विजातिषु ब्राह्मण्यम् । अत्रापि द्विजशब्दार्थे संभवति नान्वयिनि लक्षणा न्याय्या ।

"तथा च महाभारते शूद्रस्यापि त्रय आश्रमाः श्रूयन्ते 'शुश्रूषा कृतकृत्यस्येति' उपक्रम्य 'आश्रमा विहिताः सर्वे वर्जयित्वा निरामिषम्', पारिव्राज्यमित्यर्थः "

नैवं तस्यायमर्थः, 'सर्व आश्रमास्तु न कर्तव्याः । किंतर्हि ? शुश्रूषयाऽपत्योत्पादनेन च सर्वाश्रमफलं लभते' । द्विजातीन् शुश्रूषमाणो गार्हस्थ्येन सर्वाश्रमफलं लभते, परिव्राजक-फलं मोक्षं वर्जयित्वा ।

अतो ब्राह्मणधर्म एव चातुराश्रम्यमिति सिद्धम् ।। ९७ ।।

इति श्रीभट्टमेधातिथिविरचिते मनुभाष्ये षष्ठोऽध्यायः ॥ ६ ॥



| Size. | | Contents. | Per unit of 96 or 100 pages |
|---|---|---|---|
| Demy octavo | ... | Oriental text only ... ... | Rs. 0-12-0 |
| | | Text and translation, English notes, etc., mixed; or translation only ... | ,, 1-0-0 |
| Royal octavo | ... | Oriental text only ... ... | ,, 1-0-0 |
| | | Text and translation, English notes, etc., mixed; or translation only ... | ,, 1-4-0 |
| Quarto ... | ... | Oriental text only ... ... | ,, 2-0-0 |
| | | Text and translation, English notes, etc., mixed; or translation only ... | ,, 2-8-0 |

There are some exceptions to this scale, which in each case will be indicated in the price-lists. For the calculation of prices, each part of a unit in excess of the 96 or 100 pages counts again as a full unit.

Single issues may be bought separately, but three years after the completion of a work no complete sets are broken for the sale of loose component parts.

Each issue bears, besides its issue number, a fascicle number indicating its place in the work and volume to which it belongs.

**With the issue of this Notice all previous prices and price-lists are cancelled.**

CALCUTTA,
*1st January*, 1932.

The publications or information about them are obtainable from the Asiatic Society of Bengal, No. 1, Park Street, Calcutta, or from the Society's Agents:—

MESSRS. LUZAC & CO., 46, Great Russell Street, London, W.C.

M. PAUL GEUTHNER, 13, Rue Jacob, Paris, VI^e.

BUCHHANDLUNG OTTO HARRASSOWITZ, 14, Querstrasse, Leipzig.

MESSRS. THACKER, SPINK & CO., LD., 3, Esplanade, East, Calcutta.

*Residents of Europe should order from the Agents.*

When ordering direct from the Society the following rules should be observed:—

Orders should be addressed to the Asiatic Society of Bengal and not to any Official by name or title.

All Cheques, Money Orders, etc., should be made payable to the "Treasurer, Asiatic Society of Bengal."

Orders for books should be accompanied by a full name and address, legibly written, and should be sent on a separate sheet of paper containing no other communication.

In India, books are supplied by V.-P.P.

